नियमार्थे पुनः सति नार्थ एवकारकरणेन । ननु च प्रापकेऽपि सति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति । इष्टतोऽवधारणार्थस्तर्ह्येवकारः कर्तव्यः । यथैवं विज्ञायेत—'लङः शाकटायनस्यैवे'ति । मैवं विज्ञायि—'लङ एव शाकटायनस्ये'ति । किं च स्यात् ? लुङः शाकटायनस्य न स्यात् । अदुः अगुः अधुः अस्थुः ।

**लङ्ग्रहणं च ॥ ४ ॥**

लङ्ग्रहणं च कर्तव्यम् । लङः शाकटायनस्यैवेति ॥ नियमार्थे पुनः सति नार्थो लङ्ग्रहणेन । आतो 'ङित' × इति वर्तते । न चान्य आकारादनन्तरो ङिदस्त्यन्यदतो लङः ।

अस्तु तर्हि नियमार्थम् । ननु चोक्तं 'जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहण'मिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? यो द्वाभ्यामनन्तर आतश्च सिचश्च ।

अथ तदेवकारकरणं नैव कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ? उत्तरार्थम् । 'लिट् च' 'लिङाशिषि' [ ३ । ४ । ११५; ११६ ] आर्धधातुकमेव यथा स्यात् । इतरथा हि वचनादार्धधातुकसंज्ञा स्यात्, तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा* ।

प्र०—कर्तव्य भवति । **एवकारकरणं चेति** । यदा सिज्ग्रहणमिह नानुवर्तते तदानेनैव लङादेशस्य झेरात उत्तरस्याऽयुरित्यादौ जुसि सिद्धे 'लङः शाकटायनस्यैवे'ति नियमार्थ एवकार कर्तव्यः, अन्येषा मतेन अयानित्यादि यथा स्यात् । यदा तु सिज्ग्रहणानुवृत्त्या नियमार्थमिद तदा 'लङ शाकटायनस्ये'त्येव पक्षे विध्यर्थं कर्तव्य, नार्थ एवकारेणेत्यर्थः । **मैवं विज्ञायीति** । 'लङ एव शाकटायनस्ये'ति विज्ञायमाने लुङः शाकटायनस्य न स्यात् । ततश्च लुङि विकल्पः प्रसज्येत । लङि तु नित्य. स्यादित्यर्थः । **तुल्यजातीयस्येति** । सिज्लुक विना आतः सिचश्चानन्तरो झिर्न

उ०—इति, उत्तरत्र लङ्ग्रहणाच्चाऽत आह—**अथवेति** । **नियमार्थंस्त्वायेति** । तत्फलन्तु 'अभूवन्नि'त्यस्य व्यावृत्तिः । नियमपक्षे योगविभागप्रयुक्तगौरवेऽपि लाघवान्तरं दर्शयति—**अस्य हीति** । ततश्च **लुङीति** । शाकटायनमते लङ एवाऽन्यस्य तन्मते नेत्यर्थे लुङि शाकटायनमते निषेधः, अन्यस्य मते जुसित्यर्थाद्विकल्पः फलितः । लङि तु शाकटायनमतेऽन्यमते च प्राप्त्या नित्यत्वं फलतीति भावः । भाष्ये—**लङ्ग्रहणञ्चेति** । असति लङ्ग्रहणे लुङ्यपि विकल्पः स्यात् । न च 'आत' इति योगविभागाल्लुङि नित्य इति वाच्यं, लुङि विकल्पो

१—'अयुः' पा० ।

× नित्यं ङितः ३ । ४ । ९९

* तिङ्शित् सार्वधातुकम् ३ । ४ । ११३

अथ तल्लङ्ग्रहणं नैव कर्तव्यम् ? कर्तव्यं च । किं प्रयोजनम् ? लङेव यो लङ्तत्र यथा स्याल्लङ्वद्भावेन यो लङ् तत्र मा भूदिति† ॥ ११० ॥

## आर्धधातुकं शेषः ॥ ३ । ४ । ११४ ॥

### आर्धधातुकसंज्ञायां धातुग्रहणम् ॥ १ ॥

आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् । इह मा भूत्—वृक्षत्वं वृक्षतेति ॥ क्रियमाणे चापि धातुग्रहणे—

### स्वादिप्रतिषेधः ॥ २ ॥

स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत्—लूभ्यां लूभिरिति ॥ अनुक्रान्तापेक्षं शेषग्रहणम् ॥ एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति‡ । तस्माद्धातुग्रहणं कर्तव्यम् ।

[ तत्तर्हि धातुग्रहणं कर्तव्यम् ? ][1] न कर्तव्यम् । आतृतीयाऽध्यायपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते । क्व प्रकृतः ? 'धातोरेकाचो हलादेः' [ ३ । १ । २२ ] इति ॥ एवमपि श्रीकाम्यति भूकाम्यतीति प्राप्नोति ।

प्र०—भवतीति सिज्लुगन्तस्याकारान्तस्येह ग्रहणमिति नियमेन सिज्लुगन्तमेव निवर्त्यते । उत्तरार्थमिति । अन्यथैकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्य दृष्टत्वाल्लिङ्लडादेशाना सार्वधातुकसञ्ज्ञाऽपि स्यात् । ततस्तन्निमित्तविकारणप्रसङ्गः । आर्द्धधातुकसञ्ज्ञा चेडाद्यर्था स्यात् ॥ ११० ॥

आर्द्धधा । अनुक्रान्तापेक्षमिति । अनुक्रान्ता ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्द्धधातुकसंज्ञा भवन्ति न त्वनुक्रस्यमाना इत्यर्थः । धातोरित्येवमिति । धातोरित्येव धातुशब्दमुच्चार्य ये

उ०—लङि नित्य इति वैपरीत्यस्याऽपि सम्भवादिति भावः । एवञ्च 'आत' इति सूत्रं 'सिच' इत्यनुवृत्त्या नियमार्थम्, उत्तरसूत्रन्तु विध्यर्थम् । 'शाकटायनस्यैवे'त्येवकार उत्तरार्थः । लङ्ग्रहणं लङ्वद्भावेन लङोऽग्रहणार्थमिति बोध्यम् । एवञ्च 'धातो'रिति सूत्रस्थभाष्यं प्रौढया, एतत्सूत्रस्थभाष्यविरोधादिति बोध्यम् ॥ ११० ॥

आर्द्धधा । भाष्ये—धातोरेकाच इति । 'धातो'रिति पृथक्सूत्रन्तु प्रत्याख्यातमेव । धातोरित्येव-

† लोटो लङ्वत् ३ । ४ । ८५

‡ काम्यच्च ३ । १ । ९; सार्वधातुकार्धधातुकयोः ७ । ३ । ८४

[1] १–कोष्ठान्तर्गतः पाठः क्वाचित्कः ।